४४ रात्रौ चोरवत्प्रविश्य गच्छसीति शेषः सत्वं कइत्येकः किं भवानित्यादि प्रश्नांतरम् ४५ ४६ ४७ अष्टाविंशतिपर्ययेइतियद्यपि अन्य
त्र चतुर्विंशतिमेपर्याये त्रेतायां रामावतारो ष्टाविंशतिमेपर्याये द्वापारांते कृष्णावतारइत्युक्तम् तथापि कल्पांतरपरतया विरोधपरिहा

प्रविशंतं हनूमंतं दृष्ट्वा लंका व्यतर्जयत् कस्त्वं वानररूपेण मामनादृत्य लंकिनीम् ४४ प्रविश्य चोरवद्रा
त्रौ किं भवान्कर्तुमिच्छति इत्युक्त्वा रोषताम्राक्षी पादेनाभिजघान तम् ४५ हनुमानपि तां वाममुष्टिना वज्रया
हनत् तदैव पतिता भूमौ रक्तमुद्वमती भृशम् ४६ उत्थाय प्राह सा लंका हनूमंतं महाबलम् हनूमन्गच्छ भ
द्रं ते जिता लंका त्वयानघ ४७ पुराहं ब्रह्मणा प्रोक्ता ह्यष्टाविंशतिपर्यये त्रेतायुगे दाशरथी रामो नारायणोऽव्ययः
४८ जनिष्यते योगमाया सीता जनकवेश्मनि भूभारहरणार्थाय प्रार्थितोयं मयाक्वचित् ४९ सभार्यो राघवो भ्राता
गमिष्यति महावनम् तत्र सीतां महामायां रावणो पहरिष्यति ५० पश्चाद्रामेण साचिव्यं सुग्रीवस्य भविष्यति सुग्री
वो जानकीं दृष्टुं वानरान्प्रेषयिष्यति ५१ तत्रैको वानरो रात्रावागमिष्यति तेंतिकम् त्वया च भर्त्सितः सोपि त्वां हनि
ष्यति मुष्टिना ५२ तेनाहता त्वं व्यथिता भविष्यसि यदानघे तदैव रावणस्यांतो भविष्यति न संशयः ५३ तस्मात्त्व
या जिता लंका जितं सर्वं त्वयानघ रावणांतःपुरवरे क्रीडाकाननमुत्तमम् ५४

रोवसेयः ४८ योगमायात्वसीतेति ज
निष्यते इत्यन्वयः क्वचित् अवतारपूर्वकाले प्रार्थितो जनिष्यते इत्यन्वयः ४९ ५० साचिव्यं सख्यम् ५१ ५२ ५३ यतस्त्व-
याहं लंका जिता तस्मात्त्वया सर्वराक्षसकुलं जितम् अथ सीतास्थितिस्थानमाह रावणांतःपुरेति ५४ ५

५५ ५६ यतोमेराघवस्मृतिरासीदतोऽहमपिधन्या तद्भक्तसंगस्यापिदुर्लभत्वंकिंवक्तव्यमितिभावः प्रसीदतां प्रसन्नःसआस्ताम् ५७
पुस्फोर स्फुरितमभवत् भुजोवामएव स्त्रियावामांग स्फुरणंशुभसूचकंपुंसोऽशुभदमितिभावः अतींद्रियस्य इंद्रियाविषयस्यरा
मस्यदक्षांगंपुस्फोर यद्वा रामसंबंधिअतींद्रियंगुप्तंयदिंद्रियंतस्यदक्षांगंदक्षिणभागःपुस्फोर तत्स्फुरणंच स्त्रीलाभसूचकंपुंसा



तन्मध्येऽशोकवनिकादिव्यपादपसंकुला अस्तितस्यांमहावृक्षः शिंशपानाममध्यगः ५५ तत्रास्तेजान
कीघोरराक्षसीभिःसुरक्षिता दृस्त्वैवंगच्छत्वरितंराघवायनिवेदय ५६ धन्याहमप्यद्यवाचिरायराघवस्मृ
तिर्ममासीद्भवपाशमोचनी तद्भक्तसंगोऽप्यतिदुर्लभोममप्रसीदतांदाशरथिःसदाहृदि ५७ उल्लंघितेऽ
ब्धौपवनात्मजेनधरासुतायाश्चदशाननस्य पुस्फोरवामाक्षिभुजश्चतीव्रंरामस्यदक्षांगमतींद्रियस्य ५८
इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेसुंदरकांडेप्रथमःसर्गः१ श्रीमहादेवउवाच ततोजगा
महनुमान्लंकांपरमशोभनाम् रात्रौसूक्ष्मतनुर्भूत्वाबभ्रामपरितःपुरीम् १ सीतान्वेषणकार्यार्थीप्रविवेश
नृपालयम् तत्रसर्वप्रदेशेषुविविच्यहनुमान्कपिः २ नापश्यज्जानकींस्मृत्वाततोलंकाभिभाषितम् जगाम
हनुमान्शीघ्रमशोकवनिकांशुभाम् ३ सुरपादपसंबाधांरत्नसोपानवापिकाम् नानापक्षिमृगाकीर्णांस्वर्णप्रा
सादशोभिताम् ४

मित्याहुः ५८ इतिश्री॰सुंदरकांडेप्रथमःसर्गः१ ततइति सूक्ष्मतनुःसूक्ष्मवानररूपः१ सीतान्वेषणकार्यार्थीसी
तान्वेषणरूपकार्येच्छावान् विविच्यदृष्ट्वा २ ततोलंकावाक्यंस्मृत्वाहनूमान्शीघ्रंजगाम ३ सुरपादपाः कल्पवृक्षादयः ४ ७

फलैरानम्राणिशाखाग्राणियेषांतैः पादपैः ५ अभ्रंलिहमत्युच्चं चैत्यप्रासादंदेवतास्थानविशेषम् अत्युच्चत्वान्मणिस्तंभादियुतत्वाच्चविस्म
यम् ६ समतीत्येतिचैत्यप्रासादमितिशेषः ७ अत्यंतनिबिडपत्रत्वादेवाहृष्टआतपोयत्रजनैस्तम् स्वर्णवर्णविहंगमैः पक्षिभिराकीर्णव्याप्तमि
त्यर्थेमयूरव्यंसकादित्वात्समासः ८ एकवेणींहरणादिनावधिसंस्कारहितामित्यर्थः यद्वाशोभार्थमन्यदावेणीत्रयबंधःपुरतोद्वयंपश्चादेकेति

फलैरानम्रशाखाग्रपादपैःपरिवारिताम् विचिन्वन्नूजानकींतत्रप्रतिवृक्षंमरुत्सुतः ५ ददर्शाभ्रंलिहंतत्रचै
त्यप्रासादमुत्तमम् दृष्ट्वाविस्मयमापन्नोमणिस्तंभशतान्वितम् ६ समतीत्यपुनर्गत्वाकिंचिद्दूरंसमारुतिः द
दर्शशिंशपावृक्षमत्यंतनिबिडच्छदम् ७ अदृष्टातपमाकीर्णस्वर्णवर्णविहंगमम् तन्मूलेराक्षसीमध्येस्थितां
जनकनंदिनीम् ८ ददर्शहनुमान्वीरोदेवतामिवभूतले एकवेणींकृशांदीनांमलिनांबरधारिणीम् ९ भूमौश
यानांशोचंतींरामरामेतिभाषिणीम् त्रातारंनाधिगच्छंतीमुपवासकृशांशुभाम् १० शाखांतच्छदमध्यस्थो
ददर्शकपिकुंजरः कृतार्थोऽहंकृतार्थोऽहंदृष्ट्वाजनकनंदिनीम् ११ मयैवसाधितंकार्यंरामस्यपरमात्मनः ततः
किलकिलाशब्दोबभूवांतःपुराद्बहिः १२ किमेतदितिसंलीनोवृक्षपत्रेषुमारुतिः आयांतंरावणंतत्रस्त्रीजनैः
परिवारितम् १३ दशास्यंविंशतिभुजंनीलांजनचयोपमम् दृष्ट्वाविस्मयमापन्नोपत्रखंडेव्यलीयत १४ राव
णोराघवेणाशुमरणंमेकथंभवेत् सीतार्थमपिनायातिरामःकिंकारणंभवेत् १५

संप्रतितुसंस्काररराहित्यात्पृष्ठलंबिनी
एकैवेत्यर्थः दीनांस्वजनविरहाद्दीनामिवशोचंतींआत्मानमितिशेषः ९ १० शाखानामंतेप्रांतेयेच्छदाःपत्राणि तेषांमध्यस्थः तद्दर्शनजा
नंदाभिनयःकृतार्थइत्यादि ११ १२ किमेतत् किंजन्योयंशब्दः अलीयत तद्दर्शनेनकरिष्यमाणकार्यभंगभियेतिभावः १४ १५

इत्येवंचिंतयन् रावणोराघवेणेतिश्लोकोक्तंचिंतयन्नित्यंसदाहृदिराममेवध्यायन्नास्तइतिशेषः अतस्तस्मिन्दिनेपररात्रौहनूमत्प्रवेशदिन रात्रिसंबंध्यपररात्रेइत्यर्थः समासांताभावस्तदनित्यत्वात् १६ स्वप्नेनिद्रासमयेरामादिष्टः कश्चिद्वानरोलंकामागत्य वृक्षाग्रस्थोऽनुपश्यति सीतामितिशेषः १७ इतिअद्भुतंस्वप्नंदृष्ट्वाअयंस्वप्नःकदाचित्सत्योभवेत् अतस्तत्रसीतासमीपंगत्वाएवंकरोमीति अचिंतयदितिशेषः १८ यदचिंतयत्तदाह जानकीमिति विध्येतिल्यबार्षः तांवाक्शरैर्विध्वानितरांदुःखितांकरोमि तद्दृष्ट्वावानरोरामायनिवेदयतु एवंहिरा

इत्येवंचिंतयन्नित्यंराममेव सदाहृदि तस्मिन्दिनेऽपररात्रौरावणोराक्षसाधिपः १६ स्वप्नेरामेणसंदिष्टःकश्चि दागत्यवानरः कामरूपधरःसूक्ष्मो वृक्षाग्रस्थोऽनुपश्यति १७ इतिदृष्ट्वाद्भुतस्वप्नंस्वात्मन्येवानुचिंत्यसः स्वप्नः कदाचित्सत्यःस्यादेवंतत्रकरोम्यहम् १८ जानकींवाक्शरैर्विध्यदुःखितांनितरामहम् करोमिदृष्ट्वारामायनि वेदयतुवानरः १९ इत्येवंचिंतयन्सीतासमीपमगमद्द्रुतम् नूपुराणांकिंकिणीनांश्रुत्वाशिंजितमंगना २० सीता भीतालीयमानास्वात्मन्येवसुमध्यमा अधोमुखयश्रुनयनास्थितारामार्पितांतरा २१ रावणोऽपितदासीता मालोक्याहसुमध्यमे मांदृष्ट्वाकिंवृथासुभ्रुस्वात्मन्येवविलीयसे २२ रामोवनचराणांहिमध्येतिष्ठतिसानुजः कदाचिद्दृश्यतेकैश्चित्कदाचिन्नैवदृश्यते २३ मयातुबहुधालोकाःप्रेषितास्तस्यदर्शने नपश्यंतिप्रयत्नेनवी क्ष्यमाणाःसमंततः २४

मः शीघ्रमागच्छेदितिभावः १९ नूपुराणिपादभूषणानि किंकिण्योजघनभूषणानिशिंजितंशब्द म् २० भीतासीतारूपांगनास्वात्मन्येवस्वशरीरेएवलीयमानास्थितेत्यन्वयः रामेऽर्पितंस्थापितमंतरंचित्तंयया २१ किमाह तदाह सुमध्यमेइत्यादि २२ २३ लोकाश्चाररूपाःप्रयत्नेनसमंततोवीक्ष्यमाणाअपिरामंनपश्यंति २४ ५ ५ ४

त्वयिनिस्पृहेणइच्छाहीनेनपूर्णकामत्वादित्यांतरोऽर्थः त्वयासदालिंगितोऽपिध्यानेनसदाहृदिचिंतनात् अतएवसमीपस्थोऽपि यद्वा श
क्तिशक्तिमतोरभेदात्सदालिंगितोविभुत्वाच्चसमीपस्थोयद्यपि २५ तथाप्यस्यरामस्यहृदयेत्वयि त्वद्विषयेस्नेहो नजायते अतएवेय
त्कालंत्वदुपेक्षातस्येतिभावः सर्वत्रसमत्वात्तस्यनक्वापिस्नेहइति तत्त्वंकिंच त्वत्कृतान् सर्वभोगांस्त्वयास्ववृत्तिद्वारोपनीतान् सर्वभोगा
न् सर्वविषयान् तथात्वद्गुणान् सुखसंकल्पकामादीन् भुंजानोऽपिअहंभोक्तेतिनजानाति तथाभिमानराहित्यात् अतएवकृतघ्नः अ

किंकरिष्यसिरामेणनिस्पृहेणसदात्वयि त्वयासदालिंगितोऽपिसमीपस्थोऽपिसर्वदा २५ हृदयेऽस्यनचस्नेह
स्त्वयिरामस्यजायते त्वत्कृतान्सर्वभोगांश्चत्वद्गुणानपिराघवः २६ भुंजानोऽपिनजानातिकृतघ्नोनिर्गु
णोऽधमः त्वमानीतामयासाध्वीदुःखशोकसमाकुला २७ इदानीमपिनायातिभक्तिहीनःकथंव्रजेत्
निःसत्वोनिर्ममोमानीमूढःपंडितमानवान् २८ नराधमंत्वंहिसुखंकिंकरिष्यसिभामिनि त्वय्यतीवसमा
सक्तंमांभजस्वासुरोत्तमम् २९

तएवनिर्गुणः योहिगुणवान्सउपकारंमनुतएव अधमःउपकारविस्मरणात् किंचनधमतिशब्द
विषयोभवतीत्यधमशब्दवाच्यइतियाथत्कृतघ्नत्वाद्युपपादयति त्वमिति २६ २७ यतस्त्वयिभक्तिहीनोऽतःकथंव्रजेत् स्वस्थानतः त्वत्सविधा
णार्थमिमंदेशमित्यर्थः निःसत्वोनिर्बलः निर्ममोममताहीनः त्वयिइयंममेतिबुद्धिहीनः २८ नराधमंपंचम्यर्थेबहिर्व्रीहिरितिकश्चित् किं
करिष्यसि तादृशेऽनुरागेणकिंप्रयोजनमित्यर्थः असुरोत्तममितिनराधमव्यतिरेकउक्तः २९ ५ ५

देवगंधर्वनागानां तद्योषितामित्यर्थः नियोक्त्री प्रभुतया आज्ञापयित्री प्रतिपद्यसे अंगीकरोषि ३० निधाय तृणमंतरे पतिव्रतायाः साक्षा
त्परपुरुषेण वार्तालापस्यानौचित्यादिति भावः त्वं च तृणतुल्य इति द्योतयितुं च ३१ शुनीवेत्युपमया अत्यंतं पराक्रमराहित्यं सूचित
म् ३२ अचिरादिति छेदः अल्पेनैव कालेनेत्यर्थः यदा रामशराघातैर्विदारितवपुर्भवान् भविष्यतीति शेषः ३३ तदा रामं मानुषं ज्ञा



देवगंधर्वनागानां यक्षकिन्नरयोषिताम् भविष्यसि नियोक्त्री त्वं यदि मां प्रतिपद्यसे ३० रावणस्य वचः श्रु
त्वा सीतामर्षसमन्विता उवाचाधोमुखी भूत्वा निधाय तृणमंतरे ३१ राघवाद्बिभ्यता नूनं भिक्षुरूपं त्वया
धृतम् रहिते राघवाभ्यां त्वं शुनीव हविरध्वरे ३२ हृतवानसि मां नीच तत्फलं प्राप्स्यसेऽचिरात् यदा रामश
राघातविदारितवपुर्भवान् ३३ ज्ञास्यसे मानुषं रामं गमिष्यसि यमांतिकम् समुद्रं शोषयित्वा वा शरैर्ब
द्ध्वाथ वारिधिम् ३४ हंतुं त्वां समरे रामो लक्ष्मणेन समन्वितः आगमिष्यत्यसंदेहो द्रक्ष्यसे राक्षसाधम ३५
त्वां सपुत्रं सहबलं हत्वा नेष्यति मां पुरम् श्रुत्वा रक्षःपतिः क्रुद्धो जानक्याः परुषाक्षरम् ३६ वाक्यं क्रोधसमा
विष्टः खड्गमुद्यम्य सत्वरः हंतुं जनकराजस्य तनयां ताम्रलोचनः ३७ मंदोदरी निवार्याह पतिं पतिहितेर
ता त्यजैनां मानुषीं दीनां दुःखितां कृपणां कृशाम् ३८

स्य सि यमांतिकं च गमिष्यसि शरैः समुद्रं शोषयित्वा वा अथवा अद्भ्यवा
रिधिं बद्ध्वा सेतुबंधेनेति शेषः ३४ तदागमनं च लक्ष्मणमनुपदमेव द्रक्ष्यसे इत्यन्वयः ३५ जानक्याः परुषाक्षरं वाक्यं श्रुत्वा क्रुद्धो भवदिति शेषः ३६ ५
ततः क्रोधसमाविष्टः खड्गमुद्यम्य जनकराजतनयां हंतुमुद्यतोऽभवदिति शेषः ३७ अन्यानुरक्तत्वात्तद्वियोगाच्च दैन्यादिविशिष्टाम् ३८

यात्वामेववरयंतित्ताबह्व्यः संतीतियोजना मदेनकाममदेनमत्तेमदयुक्तेइवलोचनेयासांताः ३९ सकामनामद्विषयकामनासहितासतीय
थामेवशगाभविष्यति नतुबलात्तथायतध्वमित्यन्वयः तर्जनंभीषणं आदरणंसांत्वं ४०४१ कुरुतपक्कांकुरुतेत्यर्थः ४२ स्वतर्जनैःस्वबुद्धि
कल्पितभीषणोपायैः स्वकैर्योग्यैर्वा ४३ इदंसांत्वस्याप्युपलक्षणंतदेवाह तत्रैकेति ४४ भीषणान्याह अपराचेति किंविलंबेन

देवगंधर्वनागानांबह्व्यःसंतिवरांगनाः त्वामेववरयंत्युच्चैर्मदमत्तविलोचनाः ३९ ततोब्रवीद्दशग्रीवोराक्षसी
र्विकृताननाः यथामेवशगासीताभविष्यतिसकामना तथायतध्वंत्वरितंतर्जनादरणादिभिः ४० द्वि
मासाभ्यंतरेसीतायदिमेवशगाभवेत् तदासर्वसुखोपेताराज्यंभोक्ष्यतिसामया ४१ यदिमासद्वयादू-
र्ध्वंमच्छय्यांनाभिनंदति ततोमेप्रातराशायहत्वाकुरुतमानुषीम् ४२ इत्युक्त्वाप्रययौस्त्रीभीरावणोंतःपु
रालयम् राक्षस्योजानकीमेत्यभीषयंत्यःस्वतर्जनैः ४३ तत्रैकाजानकीमाहयौवनंतेवृथागतम् रावणे
नसमासाद्यसफलंतुभविष्यति ४४ अपराचाहकोपेनकिंविलंबेनजानकीम् इदानींछिद्यतामंगंविभज्य
चपृथक्पृथक् ४५ अन्यातुखड्गमुद्यम्यजानकींहंतुमुद्यता अन्याकरालवदनाविदार्यास्यमभीषयत् ४६
एवंतांभीषयंतीस्ताराक्षसीर्विकृताननाः निवार्यत्रिजटावृद्धाराक्षसीवाक्यमब्रवीत् ४७ शृणुध्वंदुष्टराक्ष
स्योमद्वाक्यंवोहितंभवेत् ४८ नभीषयध्वंरुदतींनमस्कुरुतजानकीम् इदानीमेवमेस्वप्नेरामःकमललोचनः ४९

अस्यावधेइतिशेषः जानकीमिदानीमेवछेद्यतां अस्याअंगंपृथक्पृथक्विभज्यपच्यतामितिशेषः ४५ ४६ ४७ मद्वाक्यंशृणुध्वं
यच्छ्रुतंसद्वोहितंभवेत् ४८ वाक्यमाहनेति इदानीमेवमेमयारामःस्वप्नेदृष्टइत्यन्वयः ४९ ७ ७ ७

कथंदृष्टस्तदाह आरूढोतिसमागतः संयुक्तः ५० स्वांकेजानकीमारोप्य अगस्त्यपर्वतस्य मूर्द्धनिऊर्ध्वभागेस्थितोदृष्टः एवंरामविषयंशु
भस्वप्नमुक्त्वारावणविषयमनिष्टस्वप्नमाह रावणइति ५१ वदनमालिकांस्वमुंडमालांस्वहस्तेकृत्वागाहदित्यर्थः नन्वेवंकिंलंकाऽ
राक्षसैवभविष्यतीत्याशंक्यनेत्याह बिभीषणइति रामस्यसेवांकरोति एवंविधःस्वप्नेदृष्टोऽनःसोत्रराज्यंकर्तेत्याह सर्वथेत्यादि



आरूढोरावतंशभ्रंलक्ष्मणेनसमागतः दग्ध्वालंकापुरींसर्वांहत्वारावणमाहवे ५० आरोप्यजानकींस्वांके
स्थितोदृष्टोऽगमूर्द्धनि रावणोगोमयन्हदेतैलाभ्यक्तोदिगंबरः ५१ अगाहत्पुत्रपौत्रैश्चकृत्वावदनमालि
काम् बिभीषणस्तुरामस्यसन्निधौदृष्टमानसः ५२ सेवांकरोतिरामस्यपादयोर्भक्तिसंयुतः सर्वथारावण
रामोहत्वासकुलमंजसा ५३ बिभीषणायाधिपत्यंदत्वासीतांशुभाननाम् अंकेनिधायस्वपुरींगमिष्यतिन
संशयः ५४ त्रिजटायावचःश्रुत्वाभीतास्ताराक्षसस्त्रियः तूष्णीमासंस्तत्रतत्रनिद्रावशमुपागताः ५५ त
र्जिताराक्षसीभिःसासीताभीतातिविह्वला त्रातारंनाधिगच्छंतीदुःखेनपरिमूर्च्छिता ५६ अश्रुभिःपू
र्णनयनाचिंतयंतीदमब्रवीत् प्रभातेभक्षयिष्यंतिराक्षस्योमांनसंशयः इदानीमेवमरणंकेनोपायेनमे
भवेत् ५७ एवंसुदुःखेनपरिप्लुतासाविमुक्तकंठंरुदतीचिराय आलंब्यशाखांकृतनिश्चयामृतौनजान-
तीकंचिदुपायमंगना ५८ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेसुंदरकांडेद्वितीयःसर्गः २

५२ ५३ ५४ ५५ त्रातारमप्राप्नुवतीदुःखेनमूर्च्छितामूर्च्छितेवाश्रुयुक्तनेत्राचिंतयंतीदमात्मनासहाब्रवीत् ५६ ५७ मृतौकृत
निश्चयामरणस्यकंचिदुपायंकमप्युपायमजानतीशाखामालंब्यचिरायातिष्ठदितिशेषः ५८ इतिश्रीम॰ सुंदरकांडे॰ द्विती॰ २ ६

ततस्तदुपायंनिश्चित्याहोद्बंधनेनवेति१ उद्बंधनसाधनमाह दीर्घवेणीति अथानंतरं एवंमरणायनिश्चितबुद्धिंजानकींविलोक्येत्यन्वयः २किंचिद्विचार्यअयंवचनावसरइतिनिश्चित्यसूक्ष्मरूपःसन् जानक्यास्तस्याएवश्रोत्रगंयथाभवतितथाशनैःशनैरभाषतेत्यन्वयः ३ तद्वचआह इक्ष्वाक्विति ४ लक्षणैःसामुद्रिकोक्तोत्तमलक्षणैः शत्रुहाशत्रुघ्नाख्यइत्यर्थः ५ ६ रावणेननीतेत्यन्वयः ७मार्गमाणः

श्रीमहादेवउवाच उद्बंधनेनवामोक्ष्येशरीरंराघवंविना जीवितेनफलंकिंस्यान्ममरक्षोधिमध्यतः १दीर्घवेणीममात्यर्थमुद्बंधायभविष्यति एवंनिश्चितबुद्धिंतांमरणायाथजानकीम् २विलोक्यहनुमान्किंचिद्विचार्यैनदभाषत शनैःशनैःसूक्ष्मरूपोजानक्याःश्रोत्रगंवचः ३ इक्ष्वाकुवंशसंभूतोराजादशरथोमहान् अयोध्याधिपतिस्तस्यचत्वारोलोकविश्रुताः ४ पुत्रादेवसमाःसर्वेलक्षणैरुपलक्षिताः रामश्चलक्ष्मणश्चैवभरतश्चैवशत्रुहा ५ज्येष्ठोरामःपितुर्वाक्याद्दंडकारण्यमागतः लक्ष्मणेनसहभ्रात्रासीतयाभार्ययासह ६उवासगौतमीतीरेपंचवट्यांमहामनाः तत्रनीतामहाभागासीताजनकनंदिनी ७ रहितेरामचंद्रेणरावणेनदुरात्मना ततोरामोऽतिदुःखार्तोमार्गमाणोऽथजानकीम् ८ जटायुषपक्षिराजमपश्यत्पतितंभुवि तस्मैदत्वादिवंशीघ्रंऋष्यमूकमुपागमत् ९ सुग्रीवेणकृतामैत्रीरामस्यविदितात्मनः तद्भार्याहारिणंहत्वावालिनंरघुनंदनः १०

अन्वेषयन् ८ दिवंस्वर्लोकं तल्लोकवासमितियावत् ९ रामस्यसंकल्पमात्रात्सर्वसाधकस्यनवानरमैत्र्याःप्रयोजनमित्यौद्धत्यपरिहारायसुग्रीवेणकृतेत्युक्तंनतुरामेणकृतेति तद्भार्याहारिणं सुग्रीवभार्याहारिणम् १०

अ॰रा॰टी॰ ७

मित्रकार्यं सुग्रीवकृतमित्रत्वकार्यं सहायभूतान् समानीय नानापर्वतादिभ्यो दूतैर्वानरान् किष्किंधां समानाय्य ११ तान् वानरान्
सीतायाः परिमार्गणे तन्निमित्तं परितः प्रेषयामासेत्यन्वयः १२ समुद्रमुल्लंघ्य लंकानगरीं दृष्ट्वा तत्र तत्र जानकीं विचिन्वन् अन्वे
षयन् शनैः क्रमेणाशोकवनिकां दृष्ट्वा तत्र तां विचिन्वन् शिंशपातरुं दृष्टवान् अत्र शिंशपामूले जानकीमद्राक्षमतोऽत्रागतोऽहम् कृतकृ
त्यः संवृत्त इति शेषः १३ १४ १५ वायुनेति तस्य जगत्क्रियासाक्षित्वात्तेन कथितत्वसंभावना १६ स्वप्नो वेत्यादिविकल्पत्रयं सत्यस्वमभ्र

राज्येऽभिषेच्य सुग्रीवं मित्रकार्यं चकार सः सुग्रीवस्तु समानाय्य वानरान् वानरप्रभुः ११ प्रेषयामास परितो-
वानरान् परिमार्गणे सीतायास्तत्र चैकोऽहं सुग्रीवसचिवो हरिः १२ संपातिवचनाच्छीघ्रमुल्लंघ्य शतयो
जनम् समुद्रं नगरीं लंकां विचिन्वन् जानकीं शुभाम् १३ शनैरशोकवनिकां विचिन्वन् शिंशपातरुम् अ
द्राक्षं जानकीमत्र शोचन्तीं दुःखसंप्लुताम् १४ रामस्य महिषीं देवीं कृतकृत्योऽहमागतः इत्युक्त्वोपररा
माथ मारुतिर्बुद्धिमत्तरः १५ सीता क्रमेण तत्सर्वं श्रुत्वा विस्मयमाययौ किमिदं मे श्रुतं व्योम्नि वायुना समु
दीरितम् १६ स्वप्नो वा मे मनोभ्रान्तिर्यदि वा सत्यमेव तत् निद्रा मे नास्ति दुःखेन जानाम्येतत्कुतो भ्रमः १७
येन मे कर्णपीयूषं वचनं समुदीरितम् स दृश्यतां महाभागः प्रियवादी ममाग्रतः १८

मातिरिक्तं किं वितर्कं मे भाजनकं वाक्यमित्यर्थः तत्र दुःखहेतुना निद्राभावात्स्वप्नस्यासंभवः भ्रमोऽपि नेत्याह जानाम्येतत् एतत्पदार्थ
जातं यथास्थितस्वरूपेण जानामि अतो न भ्रमसंभवः यद्वा भ्रांतिः स्वाज्ञाने भ्रमत्वं न विकल्पयति मम च तथा विकल्पोऽतो न भ्रम इति
भावः १७ तस्मात्सत्यत्वमेव निश्चित्याह येनेति मम माग्रतो दृश्यतां म माग्रतो भूत्वात्मानं दर्शयत्वित्यर्थः १८ ७ ७

सुं॰कां॰ ५

तत्ररवंडतः १९ भाषायांचिमनाचिमनीकलविंकःचटकः चटकः कलविंकःस्यात्तस्यस्त्रीचटकातयोःपुमपत्येचाटकैरः स्त्र्यपत्येचटकैव साइत्यमरः पीतवर्णोवानरः पीतवानरः २० २१ २२ शंकांरावणत्वशंकांपरमात्मनइतितत्स्वरूपाभिज्ञत्वेनतद्दासत्वसत्यतामत्यायनाय

श्रुत्वातज्जानकीवाक्यंहनुमान्पत्ररवंडतः अवतीर्यशनैःसीतापुरतःसमवस्थितः १९ कलविंकप्रमाणांगोरक्तास्यःपीतवानरः ननामशनकैःसीतांप्रांजलिःपुरतःस्थितः २० दृष्ट्वातंजानकीभीतारावणोयमुपागतः मांमोहयितुमायातोमाययावानराकृतिः २१ इत्येवंचिंतयित्वासातूष्णीमासीदधोमुखी पुनरप्याहतांसीतांदेवियत्त्वंविशंकसे २२ नाहंतथाविधोमातस्त्यजशंकांमयिस्थितां दासोऽहंकोसलेंद्रस्यरामस्यपरमात्मनः २३ सचिवोऽहंहरींद्रस्यसुग्रीवस्यशुभप्रदे वायोःपुत्रोहमखिलप्राणभूतस्यशोभने २४ तच्छ्रुत्वाजानकीप्राहहनूमंतंकृतांजलिम् वानराणांमनुष्याणांसंगतिर्घटतेकथम् २५ यथात्वंरामचंद्रस्यदासोऽहमितिभाषसे तामाहमारुतिःप्रीतोजानकींपुरतःस्थितः २६ ऋष्यमूकमगाद्रामःशबर्यानोदितःसुधीः सुग्रीवोऋष्यमूकस्थोदृष्टवान्रामलक्ष्मणौ २७ भीतोमांप्रेषयामासज्ञातुंरामस्यहृद्गतम् ब्रह्मचारीवपुर्धृत्वागतोहंरामसन्निधिम् २८ ज्ञात्वारामस्यसद्भावंस्कंधोपरिनिधायतौ नीत्वासुग्रीवसामीप्यंसख्यंचाकरवंतयोः २९

२३ २४ २५ यथात्वंदासोऽहमितिभाषसे तथावानरमनुष्ययोः संगतिःप्रतीयते सात्रकथंघटतइत्यर्थः २६ शबर्येतिभगवतासद्वृत्तांतेशबरींप्रतिपृष्टेसति तयासुग्रीवसमीपंगच्छ ससीतामार्गणंकरिष्यति इतितयोक्तइत्यर्थः २७ भीतोवालिप्रेरितत्वभ्रांत्या २८ तौरामलक्ष्मणौसख्यंच अकरवम् कारितवानित्यर्थः अंतर्भावितण्यर्थः २९ ७

तंवालिनंजघान वानराणांराज्येऽभ्यषेचयत् सुग्रीवमित्यन्वयः ३० स सुग्रीवोभवत्याः परिमार्गणे तन्निमित्तंवानरान्प्रेषयामास ३१ ३२ अशे
षंकार्यंत्वयिस्थितं त्वमेवसकलकार्यसाधनेसमर्थः मेमम ३३ मेएतदंगुलीयकंसीतायैपरिज्ञानार्थंरामीयएवायमितिनिश्चयार्थं-
दीयतांमन्नामाक्षरमुद्रितंमन्नामाक्षरमुद्रयायुतम् ३४ ३५ नमस्कृत्वामुद्रिकांददौपुनर्नमस्कृत्वाचदूरास्थितः अनेनदानवेलायांकिंचित्समी



सुग्रीवस्यहृताभार्यावालिनातंरघूत्तमः जघानैकेनबाणेनततोराज्येऽभ्यषेचयत् ३० सुग्रीवंवानराणांसः
प्रेषयामासवानरान् ३१ दिग्भ्योमहाबलान्वीरान्भवत्याः परिमार्गणे गच्छंतराघवोदृष्ट्वामामभाषतस्सा
दरम् ३२ त्वयिकार्यमशेषंमेस्थितंमारुतनंदन ब्रूहिमेकुशलंसर्वंसीतायैलक्ष्मणस्यच ३३ अंगुलीयकमेत
न्मेपरिज्ञानार्थमुत्तमम् सीतायैदीयतांसाधुमन्नामाक्षरमुद्रितम् ३४ इत्युक्त्वाप्रददौमह्यंकराग्रादंगुलीय
कम् प्रयत्नेनमयानीतंदेविपश्यांगुलीयकम् ३५ इत्युक्त्वाप्रददौदेव्यैमुद्रिकांमारुतात्मजः नमस्कृत्वास्थि
तोदूराद्बद्धांजलिपुटोहरिः ३६ दृष्ट्वासीताप्रमुदितारामनामांकितांतदा मुद्रिकांशिरसाधृत्वास्रवदानंद
नेत्रजा ३७ कपेमेप्राणदातात्वंबुद्धिमानसिराघवे भक्तोसिप्रियकारीत्वंविश्वासोस्तितवैवहि ३८ नो
चेन्मत्सन्निधिंचान्यंपुरुषंप्रेषयेत्कथम् हनूमन्दृष्टमखिलंममदुःखादिकंत्वया ३९

पमुपसृतइतिज्ञायते ३६ मुद्रिकांदृष्ट्वाप्रमुदिताजाता ततःशिरसाधृत्वास्रवदानंदनेत्रजाजाता स्रवंति आनंदेननेत्रजान्यश्रूणिय
स्याः सा ३७ कपेमुद्रिकारक्षणाद्बुद्धिमांस्त्वंमेप्राणदातासिराघवेभक्तोऽसि तस्यप्रियकारीचासि अतोराघवस्यतवैवविश्वासो स्ती-
तिमन्येच ३८ विश्वासतांयुक्त्यासाधयति नोचेत् त्वयिविश्वासश्चेन्नस्यात् तदान्यमविश्वस्तंपुरुषरूपंत्वांकथंमत्सन्निधिंप्रेषयेत् ३९

यथामेमथिराघवस्यदयाजायेततथासर्वराक्षसीकृततर्जनादिकथयेत्यर्थः मासद्वयेति अग्रेमरणमेव सदग्रेएवरावणेनतथाप्रतिज्ञा
तत्वादितिभावः ४० तदेवाहनागमिष्यतीति ४१ वानरानीकपैः सार्द्धमत्रागत्यरावणमुक्तविशेषणंहत्वायदिमांप्रभुर्मोचयेत् तत्कृतबं
धनादितिशेषः ४२ तत्तदावीरवर्णय बाह्मणेश्चवर्णितंतस्यवीर्यंसदृशंभवेत् तथावर्णितंभवेत् अन्यथाविपरीतमेवेत्यर्थः ४३ अतस्त

सर्वंकथयरामाययथामेजायतेदया मासद्वयावधिप्राणाःस्थास्यंतिममसत्तम ४० नागमिष्यतिचेद्रामोभक्ष
यिष्यतिमांखलः अतःशीघ्रंकपींद्रेणसुग्रीवेणसमन्वितः ४१ वानरानीकपैः सार्द्धंहत्वारावणमाहवे सपुत्रं
सबलंरामोयदिमांमोचयेत्प्रभुः ४२ तत्तस्यसदृशंवीर्यंवीरवर्णय वर्णितम् यथामांतारयेद्रामोहत्वाशीघ्रंद
शाननम् ४३ तथायतस्वहनुमन्वाचाधर्ममवाप्नुहि हनुमानपिताम्माहदेविदृष्टोयथामया ४४ रामःसलक्ष्म
णःशीघ्रमागमिष्यतिसायुधः सुग्रीवेणससैन्येनहत्वादशमुखंबलात् ४५ समानेष्यतिदेवित्वामयोध्यांना
त्रसंशयः तमाहजानकीरामःकथंवारिधिमाततम् ४६ तीर्त्वायास्यत्यमेयात्मावानरानीकपैःसह हनूम
नाहमेस्कंधावारुह्यपुरुषर्षभौ ४७ आयास्यतःससैन्यश्चसुग्रीवोवानरेश्वरः विहायसाक्षणेनैवतीर्त्वावा
रिधिमाततम् ४८ निर्दहिष्यतिरक्षौघांस्त्वत्कृतेनात्रसंशयः अनुज्ञांदेहिमेदेविगच्छामित्वरयान्वितः ४९

येति वाचावचनकृतरामप्रेरणया धर्मंबंदीमोक्षजनम् यथायथारूपोदृष्टःतथाजानेशीघ्रमागमिष्यतीत्यादि ४४ ४५ तंहनूमंतं
जानक्याह किमाहरामइत्यादि ४६ हनूमानुत्तरयति मेस्कंधावित्यादि ४७ आततंविस्तीर्णम् ४८ ४९ ७

भ्रात्रासह रामं द्रष्टुं गच्छामि गत्वा च तवांतिकमागंतुं त्वरयामि राघवः यथा मां विश्वसेत् जानकीं सर्वथा दृष्टवानिति तथा किंचिदभि
ज्ञानं देहि ५० ततोहं समुत्सुकः रामदर्शनोत्सुकः प्रयत्नेन तद्दत्ताभिज्ञानं रक्षन् गंता राघवसमीपमिति शेषः किंचिद्विचार्य तद्वच
सोत्युक्त्वं विचार्य ५१ ५२ ५३ ऐंद्रः इंद्रलोकस्थः काकरूपधर इंद्रपुत्र इत्यर्थः आमिषं मांसम् ५४ एतत् त्वत्सार्दांगुष्ठविदारणम्



द्रष्टुं रामं सह भ्रात्रा त्वरयामि तवांतिकम् देवि किंचिदभिज्ञानं देहि मे येन राघवः ५० विश्वसेन्मां प्रयत्नेन
ततो गंतास्मि समुत्सुकः ततः किंचिद्विचार्याथ सीता कमललोचना ५१ विमुच्य केशपाशांते स्थितं चूडामणिं ददौ अ
नेन विश्वसेद्रामस्त्वां कपींद्र सलक्ष्मणः ५२ अभिज्ञानार्थमन्यच्च वदामि तव सुव्रत चित्रकूटगिरौ पूर्वमेक
दा रहसि स्थितः मदंके शिर आधाय निद्राति रघुनंदनः ५३ ऐंद्रः काकस्तदागत्य नखैस्तुंडेन चासकृत् मत्पा
दांगुष्ठमारक्तं विददारामिषाशया ५४ ततो रामः प्रबुध्याथ दृष्ट्वा पादं कृतव्रणम् केन भद्रे कृतं चैतद्विप्रियं मे दुरा
त्मना ५५ इत्युक्त्वा पुरतोऽपश्यद्वायसं मां पुनः पुनः अभिद्रवंतं रक्तास्य नखतुंडं चुकोप ह ५६ तृणमेकमुपादा
य दिव्यास्त्रेणाभियोज्य तत् चिक्षेप लीलया रामो वायसोपरि तज्ज्वलत् ५७ अभ्यद्रवद्वायसश्च भीतो लोकान्
भ्रमन् पुनः इंद्रब्रह्मादिभिश्चापि न शक्यो रक्षितुं तदा ५८ रामस्य पादयोरग्रेऽपतद्भीत्या दयानिधेः शरणागतमा
लोक्य रामस्तमिदमब्रवीत् ५९

म् ५५ मां पुनः पुनरभिद्रवंतमित्यन्वयः रक्तमास्यं नखतुंडं यस्य सः तम् ५६ ५७ ज्वलत्तत् अभिमंत्रितं तृणं १
वायसमभ्यद्रवत् स वायसोऽपि भीतः लोकान् ऐंद्रब्रह्मांतान् भ्रमत्तत्र तैरपि यदा रक्षितुं शक्यो नाभवत्तदा ५८ रामपदाग्रेऽपतत् ५९

ततःकाकोगतइतिशेषः एवंपौरुषवानपिसराघवः ६० इदानीमपिएवमवस्थायामपियदुपेक्षतेतत्किमर्थम् ६१ जानाति वर्तमानसाक्षी
प्येलट् ज्ञास्यतीत्यर्थः ६२ यथात्वंसूक्ष्मवपुस्तथासर्वेऽपिवानराभवादृशाः भवद्वदेवसूक्ष्मवपुषइतिमहावपुर्भीराक्षसैर्युद्धमसंभावितमि
त्यर्थः ६३ श्रुत्वातद्वचनंसीतायाइतिशेषः देव्यैसीतायै ६४ ६५ त्वांराक्षस्योद्रक्ष्यंति दृष्ट्वाचरावणंकथयिष्यंति एवंसतिकोवेदकिंभावीत्याशयः

अमोघमेनदस्त्रंमे दत्त्वैकाक्षमितोव्रज सव्यंदत्त्वाततःकाकएवंपौरुषवानपि ६० उपेक्षतेकिमर्थंमामिदानींसो
पिराघवः हनूमानपिताम्नाहश्रुत्वासीताशुभाषितम् ६१ देवित्वांयदिजानातिस्थितामत्ररघूत्तमः करिष्यतिक्ष
णाद्भस्मलंकांराक्षसमंडिताम् ६२ जानकीप्राहतंवत्सकथंत्वंयोत्स्यसेऽसुरैः अतिसूक्ष्मवपुःसर्वेवानराश्चभवा
दृशाः ६३ श्रुत्वातद्वचनंदेव्यैपूर्वरूपमदर्शयत् मेरुमंदरसंकाशंरक्षोगणविभीषणम् ६४ दृष्ट्वासीताहनूमंतंम
हापर्वतसन्निभम् हर्षेणमहताविष्टाप्राहतंकपिकुंजरम् ६५ समर्थोऽसिमहासत्वद्रक्ष्यंतित्वांमहाबलम् राक्ष
स्यः स्वस्तिशुभःपंथागच्छरामांतिकंद्रुतम् ६६ बुभुक्षितःकपिःप्राहदर्शनात्पारणंमम भविष्यतिफलैःसर्वैस्तवदृष्टौ
स्थितैर्हिमे ६७ तथेत्युक्तःसजानक्याभक्षयित्वाफलंकपिः ततःप्रस्थापितोगच्छज्जानकींप्रणिपत्यसः किंचिद्दूर
मथोगत्वास्वात्मन्येवान्वचिंतयत् ६८ कार्यार्थमागतोदूतःस्वामिकार्याविरोधतः अन्यत्किंचिदसंपाद्यगच्छत्यधमएव
सः ६९

अतोरामांतिकंद्रुतंगच्छतेपंथाःशुभोस्तुइतिशेषः ६६ कपिर्जानकींप्राहाहंबुभुक्षितोऽस्मि अतस्तवदर्शनान्ममपारणमुचितमितिशे
षः नन्वहंरिक्ताकेनत्वांपारयामीतिशंकायामाह तवदृष्टौस्थितैःफलैर्मेपारणाभविष्यतीत्यर्थः ६७ ततस्तयाप्रस्थापितोजानकींप्रणिप
त्यागच्छत् अन्वचिंतयत् अन्वचिंतयत् अडभावआर्षः ६८ अन्यत्किंचित् स्वाम्याज्ञप्तादधिकमुत्कृष्टंकर्मेत्यर्थः ६९

अन्यत्किंचित्वीरकर्म रावणंहत्वासंभाष्यचेत्यन्वयः ७० वृक्षखंडान् वृक्षसमूहान् उत्पाट्यनिर्वृक्षामकरोत् ७१ सीताश्रयनगंशिंशप रूपम् शून्यंवृक्षैरितिशेषः विपिनंवनवृक्षान् ७२ ७३ दुःखशोकाभ्यांयुक्ताहमेनंनजानामि ७४ ७५ वानराकृतिदेहभृत् वानरदेहसद



अतोहंकिंचिदन्यच्चकृत्वाहत्वाहरावणम् संभाष्यचततोरामदर्शनार्थंव्रजाम्यहम् ७० इतिनिश्चित्यमनसा वृक्षखंडान्महाबलः उत्पाट्याशोकवनिकांनिर्वृक्षामकरोत्क्षणात् ७१ सीताश्रयनगंत्यक्त्वावनंशून्यंचकार सः उत्पाटयंतंविपिनंदृष्ट्वाराक्षसयोषितः ७२ अपृच्छञ्जानकींकोसौवानराकृतिरुद्भटः ७३ जानक्युवाच भवत्य एवजानंतिमायांराक्षसनिर्मिताम् नाहमेनंविजानामिदुःखशोकसमाकुला ७४ इत्युक्तात्वरितंगत्वाराक्षस्यो भयपीडिताः हनूमताकृतंसर्वंरावणायन्यवेदयन् ७५ देवकश्चिन्महासत्वोवानराकृतिदेहभृत् सीतयासहसंभाष्यत्वशोकवनिकांक्षणात् ७६ उत्पाट्यचैत्यप्रासादंबभंजामितविक्रमः प्रासादरक्षिणःसर्वान्हत्वातत्रैववर्तस्थिवान् तच्छ्रुत्वातूर्णमुत्थायवनभंगंमहाप्रियम् ७७ किंकरान्प्रेषयामासनियुतंराक्षसाधिपः निर्भग्नचैत्यप्रासादप्रथमांतरसंस्थितः ७८ हनुमान्पर्वताकारोलोहस्तंभकृतायुधः किंचिल्लांगूलचलनोरक्तास्योभीषणाकृतिः ७९

शदेहइत्यर्थः वानरेएवंपराक्रमासंभवादेवमुक्तिः अशोकवनिकांक्षणादुत्पाट्य तैरेवचैत्यप्रासादंबभंज ७६ तस्थिवान्स्थितः महाप्रियंमहच्चतदप्रियंचेत्यर्थः ७७ नियुतंदशकोट्यः निर्भग्नोयश्चैत्यप्रासादःतस्यप्रथमंयदंतरम् १०
प्रथमायाभूमिस्तत्रसंस्थितः ७८ लोहस्तंभएवकृतमायुधंयेनसः किंचिल्लांगूलचलनइतिस्वभावोक्तिः ७९ ५

तेकिंकरानामराक्षसाः ८० भीषणाकृतिंहनूमंतंदृष्ट्वेत्यन्वयः ८१मुद्गरोत्र लोहस्तंभः ८२ ८३सरावणः ८४ ८५ राक्षसान्रावण
प्रेषणीयान् ८६ आकाशेप्रथममुत्पपात ततोगगनादवतरन्मूर्ध्निमुद्गरेणाताडयत् ८७ ८८ ८९ इंद्रजितंप्रतित्वंहंतुंगच्छेतिभं

आपतंतंमहासंघंराक्षसानांददर्शसः चकारसिंहनादंचश्रुत्वातेसुमुहुर्मुहुः ८० हनूमंतमथोदृष्ट्वारा
क्षसाभीषणाकृतिम् निर्जघ्नुर्विविधास्त्रौघैः सर्वराक्षसघातिनम् ८१ ततउत्थायहनुमान्मुद्गरेणसमंततः
निष्पिपेषक्षणादेवमशकानिवयूथपः ८२ निहतान्किंकरान्श्रुत्वारावणःक्रोधमूर्छितः पंचसेनापतींस्तत्र
प्रेषयामासदुर्मदान् ८३ हनूमान्पितान्सर्वान्लोहस्तंभेनचाहनत् ततःक्रुद्धोमंत्रिसुतान्प्रेषयामाससस
सः ८४ आगतानपितान्सर्वान्पूर्ववद्वानरेश्वरः क्षणान्निःशेषतोहत्वालोहस्तंभेनमारुतिः ८५ पूर्वस्थानमु
पाश्रित्यप्रतीक्षन्राक्षसान्स्थितः ततोजगामबलवान्कुमारोक्षःप्रतापवान् ८६ तमुत्पपातहनुमान्दृष्ट्वाका
शेसमुद्गरः गगनात्त्वरितोमूर्ध्निमुद्गरेणव्यताडयत् ८७ हत्वातमक्षंनिःशेषंबलंसर्वंचकारसः ८८ ततःश्रुत्वा
कुमारस्यवधंराक्षसपुंगवः क्रोधेनमहताविष्टइंद्रजेतारमब्रवीत् ८९ पुत्रगच्छाम्यहंतत्रयत्रास्तेपुत्रहारिपुः हत्वा
तमथवाबध्वाआनयिष्यामिनंदितिकम् ९० इंद्रजित्पितरंप्राहत्यजशोकंमहामते मयिस्थितेकिमर्थंत्वंभाष
सेदुःखितंवचः ९१ बध्वानेष्येद्रुतंतातवानरंब्रह्मपाशतः इत्युक्त्वारथमारुह्यराक्षसैर्बहुभिर्वृतः ९२

ग्यंतरेणाहपुत्रेतिहत्वेत्युक्त
हंतुमशक्यत्वंविचार्याह बध्वावेति ९० दुःखितंवचः आज्ञाकर्तुरभावइवेतिभावः ९१ ब्रह्मपाशतः ब्रह्मास्त्राभिमंत्रितैः पाशैरित्यर्थः ९२

१३ हनूमंतंशिलीमुखैर्विध्वासिंहनादमकरोदित्यन्वयः १४ विध्वेत्यस्यैवविवरणंशिरोभागमित्यादिभेदयित्वेत्यंतम् १५ सिंहनादमक
रोत् इंद्रजिदितिशेषः १६ १७ १८ यस्यरामस्यनामयेप्राणिनोजपंतितेऽज्ञानजन्यकर्मकृतंबंधनंसंसारंपरिमुच्य सद्यएवशिवाख्यंतत्
पदंसच्चिदानंदाख्यंयांति १९ तस्यरामस्यपदांबुजध्यातामारुतिर्यतःसदैवनिर्मुक्तानिसमस्तानिबंधनानिकर्माणियस्यतादृशोभव



जगामवायुपुत्रस्यसमीपंवीरविक्रमः ततोऽतिगर्जितंकृत्वास्तंभमुद्यम्यवीर्यवान् १३ उत्पपातनभोदेशंगरुत्मा
निवमारुतिः ततोऽभ्रमंतंनभसिहनूमंतंशिलीमुखैः १४ विध्वातस्यशिरोभागमिषुभिश्चाष्टभिःपुनःहृदयं
पादयुगलंषड्भिरेकेनवालधिम् १५ भेदयित्वाततोघोरंसिंहनादमथाकरोत् ततोऽतिहर्षाद्धनुमांस्तंभमुद्यम्य
वीर्यवान् १६ जघानसारथिंसाश्वंरथंचाचूर्णयत्क्षणात् ततोऽन्यंरथमास्थायमेघनादोमहाबलः १७ शीघ्रंब्रह्मा
स्त्रमादायबध्वावानरपुंगवम् निनायनिकटंराज्ञोरावणस्यमहाबलः १८ यस्यनामसततंजपंतियेऽज्ञानक
र्मकृतबंधनंक्षणात् सद्यएवपरिमुच्यतत्पदंयांतिकोटिरविभास्वरंशिवम् १९ तस्यैवरामस्यपदांबुजंसदा
हृत्पद्ममध्येसुनिधायमारुतिः सदैवनिर्मुक्तसमस्तबंधनःकिंतस्यपाशैरितरैश्चबंधनैः १०० इतिश्री
मदध्यात्मरामायणेउमामहेश्वरसंवादेसुंदरकांडेतृतीयःसर्गः ३ श्रीमहादेवउवाच यांतंकपींद्रं
धृतपाशबंधनंविलोकयंतंनगरंविभीतवत् अताडयन्मुष्टितलैःसुकोपनाःपौराःसमंतादनुयांतईक्षितुम् १

ति अतस्तस्यपाशैरितरैर्वाबंधनैःकिंदुःखमितिशेषः १०० इतिश्रीमत्सकलराजविपदुद्धरण॰सेतौसुंदरकांडेतृतीयःसर्गः ३
धृतंस्वहस्तेनपाशबंधनंयेनतादृशंविशेषेणभीतवत् नगरंलंकांविलोकयंतंईक्षितुंकपींद्रंद्रष्टुंतमेवानुपश्चाद्यांतइतिपौरविशेषणम् १

क्षणमात्रसंगमंक्षणमात्रंसंगमः स्वसंबंधोयस्यतादृशामेनंहनूमंतंब्रह्मास्त्रंकर्तृहत्वाब्रह्मवरेणत्वांमदस्त्रंनपीडयिष्यतीतिब्रह्मदत्तव
रेणासत्वरंगतंहनूमान् तद्बंधनंज्ञात्वाऽपिफल्गुरज्जुभिर्धृतोऽपिकार्यविशेषस्यकर्तव्यरावणदर्शनादिरूपस्यगौरवात् बद्धइवयथाविस्य
र्थः २ सभांतरस्थस्यसभामध्यस्थस्य तंहनूमंतं बलारिजित् इंद्रजित् ब्रह्मवरेणब्रह्मवरलब्धब्रह्मास्त्रेणसमागतः बंधपीडामसोढ

ब्रह्मास्त्रमेनंक्षणमात्रसंगमंकृत्वागतंब्रह्मवरेणसत्वरम् ज्ञात्वाहनूमानपिफल्गुरज्जुभिर्धृतोऽयथौकार्यवि
शेषगौरवात् २ सभांतरस्थस्यचरावणस्यतंपुरोनिधायाहबलारिजित्तदा बद्धोमयाब्रह्मवरेणवानरःस
मागतोऽनेनहतामहासुराः ३ यद्युक्तमत्रार्यविचार्यमंत्रिभिर्विधीयतामेषनलौकिकोहरिः तततोविलो-
क्याहसराक्षसेश्वरःप्रहस्तमग्रेस्थितमंजनाद्रिभम् ४ प्रहस्तपृच्छैनमसौकिमागतःकिमत्रकार्यंकु
तएववानरः वनंकिमर्थंसकलंविनाशितंहताःकिमर्थंममराक्षसाबलात् ५ ततःप्रहस्तोहनुमंतमाद
रात्पप्रच्छकेनप्रहितोऽसिवानर भयंचतेमास्तुविमोक्ष्यसेमयासत्यंवदस्वाखिलराजसन्निधौ ६ ततो
तिहर्षात्पवनात्मजोरिपुंनिरीक्ष्यलोकत्रयकंटकासुरम् वक्तुंप्रचक्रेरघुनाथसत्कथांक्रमेणराममनसास्मरन्मुहुः
७

ण्णुःस्वस्वयमेवागतइत्यर्थः तद्वृत्तांतमाह अनेनेत्यादि ३ एषहरिर्नलौकिकइति तत्पराक्रमकथनं अंजनाद्रिभंअंजनाचलवत्श्या
मकांतिम् ४ कुतःकस्माद्देशादागतइतिशेषः ५ विमोक्ष्यसे अस्माद्बंधनात्प्राणभयाच्चेतिशेषःअखिलराजसन्निधौअखिल
लोकराजस्यरावणस्यसन्निधावित्यर्थः ५ ७ ५ ५ ७ ७

देवगणादीनाममित्रशत्रो आदिनानागादिसंग्रहः अशेषहृत्स्थितेः अशेषहृदयेषु स्थितिर्यस्य सर्वान्तर्यामिण इत्यर्थः अनेनतव
ततः कथमपि नमोक्ष इति सूचितम् किंच त्वन्मूर्त्यं चिकार्षोस्तस्यैव प्रेरणया सीता हृतेति सूचितम् ८ सराघवः सुग्रीवमैत्रीं कृत्वा वा-
लिनं निहत्य तं महत्पराक्रमं सुग्रीवमेव वानराणामधिपतिं चकार अनेन रामस्य कृतोपकारत्वात्तन्निमित्तं सुग्रीवः सर्ववानरैर्लं
कां रोत्स्यत्येवेति सूचितम् मित्रभार्यापहारिणं त्वत्तोप्यधिकबलं वालिनं योहतवान् सत्वां सर्वथा हनिष्यत्येवेति सूचितम् ९ सोऽपि

शृणु स्फुटं देवगणाद्यमित्र हे रामस्य दूतोऽहमशेषहृत्स्थितेः यस्याखिलेशस्य हृताधुना त्वया भार्या स्वना
शाय शुनेव सन्हविः ८ स राघवोऽभ्येत्य मतंगपर्वतं सुग्रीवमैत्रीमनलस्य सन्निधौ कृत्वैकबाणेन निहत्य
वालिनं सुग्रीवमेवाधिपतिं चकार तम् ९ स वानराणामधिपो महाबली महाबलैर्वानरयूथकोटिभिः रामेण
सार्द्धं सह लक्ष्मणेन भोः प्रवर्षणेऽमर्षयुतोऽवतिष्ठते १० संचोदितास्तेन महाहरीश्वरा धरासुतां मार्गयितुं दिशो
दश तत्राहमेकः पवनात्मजः कपिः सीतां विचिन्वन्शनकैः समागतः ११ दृष्टा मया पद्मपलाशलोचना सीता
कपित्वाद्विपिनं विनाशितम् दृष्ट्वा ततोऽहं रभसा समागतान्मां हंतुकामान् धृतचापसायकान् १२ मया हता
स्ते परिरक्षितं वपुः प्रियो हि देहोऽखिलदेहिनां प्रभो ब्रह्मास्त्रपाशेन निबध्य मां ततः समागमन्मेघनिनादनामकः
१३

रावणसंबोधनम् प्रवर्षणे तदाख्ये पर्वते अमर्षयुतस्त्वद्विषयक्रोधयुतोऽवतिष्ठते १० धरासुतां जानकीम् अनेन किमागत इ
त्यस्य चोत्तरं दत्तम् ११ वननाशनकारणमाह कपित्वादिति चंचलस्वभावत्वादित्यर्थः राक्षसहननहेतुमाह दृष्ट्वेति १२ १२
वपुः स्वशरीरं परिरक्षितम् तत्र हेतुः प्रियो हीति १३

त्यक्त्वागतंब्रह्मास्मीतिशेषः बन्धुइवागतः तथागमनेहेतुर्हितंप्रवक्तुकामइति तवतत्सवचनेकिंनिमित्तमतआह करुणेति १४ विवे
कतः विवेकेन सदसद्विवेकेनलोकस्यगतिंधर्मात्स्वर्गोऽधर्मान्नरकइत्येवंरूपांविचार्यराक्षसींबुद्धिंत्यजेत्यर्थः संसृतेः संसाराद्योमोक्षस्तस्य
हेतुकींहेतुभूतांविनयादित्वादीकञ् ईदृशींदैवींदेवप्रोक्तांगतिंमार्गंपरपीडातोनिवृत्तिरूपंमार्गंसमाश्रयदेहिनः स्वस्यात्यंतहितायेत्यर्थः १५
ननुतस्मिन्मार्गेममनाधिकारइतिचेन्नब्राह्मणत्वादिनातत्सत्त्वमित्याह त्वमिति उत्तमवंशसंभवत्वस्यविवरणं पौलस्त्यपुत्रोसीति यदितेदेह
एवात्मेतिबुद्धिस्तथापिपश्यविचारयत्वंराक्षसोनासि उत्तमवंशसंभवत्वेनब्राह्मणत्वादितिभावः आत्मबुद्ध्यादेहातिरिक्तआत्मेतिबुद्ध्या
राक्षसोनहिभवसीतिकिमुवक्तव्यमितिशेषः १६ एवंसर्वथाराक्षसत्वाभावंप्रसाध्याह शरीरेति शरीरंस्थूलंबुद्धिःसूक्ष्मशरीरंइंद्रियाणि

त्यक्त्वैवमांब्रह्मवरप्रभावनस्त्यक्त्वागतंसर्वमवैमिरावण तथाप्यहंबन्धुइवागतोहितंप्रवक्तुकामःकरुणारसार्द्रधीः
१४ विचार्यलोकस्यविवेकतोगतिंनराक्षसींबुद्धिमुपैहिरावण दैवींगतिंसंसृतिमोक्षहेतुकींसमाश्रयात्यंतहितायदेहि
नः १५ त्वंब्राह्मणोह्युत्तमवंशसंभवःपौलस्त्यपुत्रोऽसिकुबेरबांधवः देहात्मबुद्ध्यापिचपश्यराक्षसोनास्यात्मबुद्ध्या
किमुराक्षसोनहि १६ शरीरबुद्धींद्रियदुःखसंततिर्नतेनचत्वंनचनिर्विकारतः अज्ञानहेतोश्चतथैवसंततेरसत्त्वम-
स्याःस्वपतोहिदृश्यवत् १७ चक्षुरादीनितज्जन्यादुःखसंततिराधिव्याधिजादुःखेषूपलक्षणं कामादेरपिसातेतवनतेषांचित्तधर्म
त्वात् त्वंचतदाश्रयश्चित्तंतेनेतिशेषपूरणेनव्याख्येयं तस्याचेतनत्वादितिभावः नन्वात्मनएवदुःखाद्यस्तुइतिनचेदतदतआह तवनिर्विकार
तः विकाराभावान्निर्विकारंततः तवविकाराभावात् दुःखादिमत्त्वेचविकारप्रसंगः एवंचात्मनोविक्रियत्वप्रतिपादकश्रुतिविरोधस्ताश्चश्रुत
यः पूर्वंबहुशोलिखिताः नन्वेवमहंदुःखीत्यादिप्रतीतेः कागतिरत्राह अज्ञानहेतोरितिस्वपतः पुरुषस्यप्रतिभासमानस्यापिदृश्यस्ययथा
सत्त्वंतथाआत्मस्वरूपाज्ञानरूपाद्धेतोर्भासमानायाअस्याःसंततेर्दुःखसंततेर्वस्तुतोऽसत्त्वमेवैवंचाहंदुःखीत्यादिप्रतीतिःस्वप्नकालिकतत्त्व
प्रतीतिवद्भ्रमएवेतिभावः १७

नन्वेवं सत्यं वस्तु किमपि नास्त्येव किं अस्तीत्याह इदंतु सत्यमिति तत्स्वरूपं त्वित्यर्थः एतत्तव विक्रियानास्ति अविकारी चेतन एवैकः सत्यः ननु विकारहेतुज्ञानमपि सत्यमेव नेत्याह तेविकारहेतुर्नच सत्य इति शेषः तत्र हेतुमाह अद्वयत्वतः एकमेवाद्वितीयं ब्रह्मेत्यद्वैतप्रतिपादकश्रुतिविरोधात् तथाहि सतोऽद्वितीयस्य निषेध इति भावः ननु चित्तसंबंधान्ममदुःखमस्त्येवेति चेन्नेत्याह यथा सर्वगतमपि नभः पृथिव्यादिरूपगंधादिभिर्नलिप्यते सूक्ष्मत्वात् तथा देहगतोऽपि चिन्नसमानाधिकरणोऽपि यतः सूक्ष्मकोऽतिसूक्ष्मोऽतस्तद्गतदुःखादिभिर्वस्तुतो नलिप्यते एवंच नीलं नभ इत्यादिप्रतीतिवदहं दुःखीत्यादिप्रतीतिर्भ्रम एवेति भावः ननु तर्हि मुक्तसंसारिव्यवस्था किं नास्त्येव नास्तीत्या

इदंतु सत्यं तव नास्ति विक्रिया विकारहेतुर्नच तेद्वयत्वतः यथा नभः सर्वगतं नलिप्यते तथा भवान्देहगतोऽपि सूक्ष्मकः देहेंद्रियप्राणशरीरसंगतस्त्वात्मेति बुद्ध्याखिलबंधभाग्भवेत् १८ चिन्मात्रमेवाहमजोहमक्षरोह्यानंदभावोहमिति प्रमुच्यते देहोप्यनात्मा पृथिवीविकारजो न प्राण आत्माऽनिल एष एव सः १९

ह देहेत्यादि देहोऽत्र सूक्ष्मः शरीरं स्थूलं तत्संगतस्तदविवेकाग्रहात् तेष्वेवयाऽऽत्मबुद्धिस्तयाखिलबंधभाग्भवेत् अविवेक एवमुख्यं संसारकारणमिति भावः १८ ननु तर्हि मुक्तिर्दुर्लभेति शंकायां तत्कारणमाह चिन्मात्रमिति विवेकज्ञानमेव मोक्षकारणमिति तन्माह तत्राद्यार्द्धेनात्मनि जडवैधर्म्यमुक्तम् अजत्वेनोत्पत्तिराहित्यं अक्षरत्वेनाविनाशित्वम् आनंदभावः तद्रूपः देहादौ तद्वैधर्म्यमाह देहोपीति पृथिवीविकारैस्तत्परमाणुभिर्जनित इति अनात्मा अनेनाचेतनत्वजन्यत्वादिवैधर्म्यमुक्तम् प्राणोऽप्यात्मा नयत एषो बहिर्दृश्यमानो जडोऽनिल एव समाणोयः प्राणः स वायुरिति श्रुतेः १९ १३

७ ७

मनोपिनात्मेत्याह मनोपीति नोइत्यस्यात्मेतिशेषः नातस्तत् अहंकारस्यविकारः नचापिबुद्धिरिति बुद्धिरहंकारोपिनात्मा यतः प्रकृतेः
विकारान्महतोजायतइति प्रकृतेर्विकारजा आत्मनिउक्तमेववैधर्म्यंदार्ढ्यायपुनराह आत्मेत्यादि सएवेश्वरः अनेनचेतनानेकत्वं
नेतिदर्शितम् २० निरंजनइत्यस्यैवव्याख्या सदाउपाधितोमुक्तः उपाधिभूतचित्तधर्मैर्दुःखादिभिरलिप्तइत्यर्थः एवमात्मानंज्ञात्वाइ
तः संसाराद्विमुच्यते नन्वीदृशज्ञानमेव कथंस्यात्तत्राहातोऽहमिति मोक्षस्यात्यंतिकंसाधनंनियतंसाधनमित्यर्थः २१ प्रतिज्ञातमाह

मनोप्यहंकारविकारएवनो नचापिबुद्धिः प्रकृतेर्विकारजा आत्माचिदानंदमयोऽविकारवान्देहादिसंघाद्व्यति
रिक्तईश्वरः २० निरंजनोमुक्तउपाधितः सदाज्ञात्वैवमात्मानमितोविमुच्यते अतोऽहमात्यंतिकमोक्षसा
धनंवक्ष्येशृणुष्वावहितोमहामते २१ विष्णोर्हिभक्तिः सुविशोधनंधियस्ततोभवेज्ज्ञानमतीवनिर्मलम् वि
शुद्धतत्त्वानुभवोभवेत्ततः सम्यग्विदित्वापरमंपदंव्रजेत् २२ अतोभजस्वाद्यहरिंरमापतिंरामंपुराणंप्रकृ
तेः परंविभुम् विसृज्यमौर्ख्यंहृदिशत्रुभावनांभजस्वरामंशरणागतप्रियम् सीतांपुरस्कृत्यसपुत्रबां
धवोरामंनमस्कृत्यविमुच्यसेभयात् २३

विष्णोर्हीतिधियश्चित्तस्यानित्यानित्यविवेकद्वाराज्ञानं आत्माचिदानंदम
यइत्यादिनोक्तं ततः तद्विषयनिदिध्यासनतः विशुद्धतत्त्वानुभवोभवेत् अपरोक्षसाक्षात्कारोभवेत् तंपरमंपदंब्रह्मसायु
ज्यम् २२ उपसंहरति अतइति यस्यभक्तिर्ज्ञानसाधनं सविष्णुरयमेव तद्बोधकेविशेषणे हरिंरमापतिमिति ननुदशरथपु
त्रोयंनसइत्यत्राह प्रकृतेःपरमित्यादि दशरथपुत्रत्वादितु कल्पितमित्याशयः मौर्ख्यंअयंमनुष्यइतिबुद्धिरूपं तत्कृताशत्रुत्वेन
भावनांचविसृज्य भजस्वसंप्रतियुक्तम् भजनप्रकारमाह सीतामिति २३ ७ ७ ७

अथव्यतिरेकमुखेनतत्तद्भावनाप्रकारमाह राममिति हृदिस्थमित्यनेनांतर्यामितयाप्रेरकत्वमुक्तम् सुखस्वरूपोऽद्वितीयोमत्प्रेरक इत्येवमभावयन्नित्यावत् दुःखरूपास्तरंगमालायस्यतस्य २४ नोचेत् मदुक्ताकरणे तेनज्वलंतमात्मानमरक्षिता लुटरूपं किंच स्वकृतैःपातकैः सीताहरणादिभिररिवत् आत्मानमधोधोनयसि नयिष्यसीत्यर्थे आर्षम् विमोक्षशंकातत्संभावनापि नभविष्य



रामंपरात्मानमभावयन्जनोभक्त्याहृदिस्थंसुखरूपमद्वयम् कथंपरंतीरमवाप्नुयाज्जनोभवांबुधेर्दुःखतरंगमालिनः २४ नोचेत्त्वमज्ञानमयेनवह्निनाज्वलंतमात्मानमरक्षितारिवत् नयस्यधोधःस्वकृतैश्चपातकैर्विमोक्ष्यशंकानचतेभविष्यति २५ श्रुत्वामृतास्वादसमानभाषितंतद्वायुसूनोर्दशकंधरोऽसुरः अमृष्यमाणोऽतिरुषाकपीश्वरंजगादरक्तांतविलोचनोज्वलन् २६ कथंममाग्रेविलपस्यभीतवत्प्लवंगमानामधमोऽसिदुष्टधीः कएषरामःकतमोवनेचरोनिहन्मिसुग्रीवयुतंनराधमम् २७ त्वांचाद्यहत्वाजनकात्मजांततोनिहन्मिरामंसहलक्ष्मणंततः सुग्रीवमग्रेबलिनंकपीश्वरंसवानरंहन्म्यचिरेणवानर ॥ श्रुत्वादशग्रीववचःसमारुतिर्विवृद्धकोपेनदहन्निवासुरम् २८ नमेसमारावणकोटयोऽधमारामस्यदासोऽहमपारविक्रमः श्रुत्वातिकोपेनहनूमतोवचोदशाननोराक्षसमेकमब्रवीत् २९

नीत्यर्थः २५ अमृतास्वादेति तदास्वादेन समानआस्वादोयस्य तादृशंभाषितमित्यर्थः २६ वनेचरः सुग्रीवः केषांमध्येतिशयितोनकेषामपीत्यर्थः २७ विवृद्धकोपेन करणेनेत्यर्थः असुरंदहन्निवाहेतिशेषः २८ अधमेत्यत्रक्रोधातिशयेन दूरात्संबोधनेप्लुतः २९ ५

पार्श्वेस्थितंराक्षसमित्यन्वयः खंडशःकुर्विंतिशेषः असूरस्यममभित्राणिबांधवाश्चपश्यंतु ३० हेराजन् अयंपरराजस्योत्कृष्टरा
जस्यशत्रुराजस्यवावानरोवधयोग्योनभवेत् मतापयुक्तैराजभिर्वधयोग्यतासंभावनमप्यनुचितम् दूतत्वात्किंपुनर्वधइतिभा
वः अयंमतापयुक्तैरिंद्रजिदादिभिरपिबंधयोग्योनेतिवृथाप्रयासइतिव्यंग्यं वधेबाधकांतरमप्याह हतेइति वार्तासीतावार्तांनिवेदये

पार्श्वेस्थितंमारयखंडशःकपिंपश्यंतुसर्वेऽसूरमित्रबांधवाः निवारयामासततोबिभीषणोमहासुरंसायुध-
मुद्यतंवधे ३० राजन्वधार्होनभवेत्कथंचनमतापयुक्तैःपरराजवानरः हतेऽस्मिन्वानरेदूते वार्ताकोवा-
निवेदयेत् रामायत्वंयमुद्दिश्यवधायसमुपस्थितः ३१ अतोवधसमंकिंचिदन्यच्चिंतयवानरेः सचिन्हो
गच्छतुहरियंहष्ट्वायास्यतिद्रुतम् ३२ रामःसुग्रीवसहितस्ततोयुद्धंभवेत्तव विभीषणवचःश्रुत्वारावणो
प्येतदब्रवीत् ३३ वानराणांहिलांगूलेमहामानोभवेत्किल अतोवस्त्रादिभिःपुच्छंवेष्टयित्वाभयत्नतः ३४
वन्हिनायोजयित्वेनंभ्रामयित्वापुरेऽभितः विसर्जयतपश्यंतुसर्वेवानरयूथपाः ३५ तथेतिशणपट्टैश्च
वस्त्रैरन्यैरनेकशः तैलाक्तैःवेष्टयामासुर्लांगूलंमारुतेर्दृढम् ३६ पुच्छाग्रेकिंचिदनलंदीपयित्वाथ
राक्षसाः रज्जुभिःसुदृढंबध्वाधृत्वातंबलिनोऽसुराः ३७

त्रामायेत्यन्वयः यंरामस्यत्वंवधायसमुपस्थितः यंराम
मुद्दिश्यत्वमात्मवधायसमुपस्थितः आत्मवधार्थंतदागमनेच्छावान्सन् स्वच्छंदःकथमत्रागच्छेदितिगूढोऽर्थः ३१ आयास्यतीतिछेदः ३२
तंतासुद्धंत्वदभिलषितंभवेत् ३३ महामनाःप्रीतिपूर्वकोममेदभित्युत्पादयमित्यभिमानः ३४ सर्वेवानरयूथपाःपश्यंतुदग्धपुच्छमेनमितिशेषः
३५ ३६ ३७

